मुखे हानिर्जयो दक्षे भ्रमः पादे श्रियो हृदि ।
वामे शीर्षे भयं राज्यं नेत्रे सौख्यं मृतिर्गुदे ॥ ३ ॥

(p. 208).

The *AS* (pp. 101-102) gives the scheme of the *Saṇicakka* as under :-

यस्मिन् शनिश्चरति वक्रगतं तदृक्षं
चत्वारि दक्षिणकरेऽङ्घ्रियुगे च षट्कम् ।
चत्वारि वामकरगाण्युदरे च पञ्च
मूर्ध्नि त्रयं नयनयोर्द्वितयं गुदे च ॥ १ ॥

227 The वर्गचक्र as described in *NJC* is as under :-

॥ वर्गचक्रम् ॥

| | | |
|---|---|---|
| ध्वांक्ष २ श. अज. | ध्वज ८ अ. ग. | धूम ५ क. मा. |
| गज ३ य. मृग. | | सिं. ६ च. सिं. |
| रासभ १ प. मू. | वृष ७ त. सर्प | श्वा ४ ट. श्वा. |

अगरुडः कमार्जारश्चः सिंहष्टः शुनीसुतः ।
तः सर्पो मूषकः पश्च यो मृगः शभआत्मजः ॥ १ ॥
वसु ८ भूत ५ रसा ६ वेदा ४ मुनि ७ चंद्रा १ त्रि ३ बाहवः ।
पूर्वादिक्रमतो ज्ञेया वर्गोपरि दिगष्टके ॥ २ ॥
नाम्नि वर्गादिवर्णानामंकाः कार्याः पृथक् पृथक् ।
पिंडिता वसुभिर्भक्ता शेषमायो ध्वजादिकः ॥ ३ ॥
शेषसंख्या ध्वजो धूमः सिंहः श्वावृषरासभाः ।
गजध्वांक्षौ क्रमेणैव आया अष्टौ भवंति ते ॥ ४ ॥
ध्वांक्षश्वारासभवृषगजसिंहध्वजानलाः ।
यथोत्तरबलाः सर्वे ज्ञातव्याः स्वरपारगैः ॥ ५ ॥
प्रभौ योधे पुरे देशे मित्रनारीगृहेषु च ।
आयाधिके भवेल्लाभो न लाभो बलवर्जिते ॥ ६ ॥

(p. 214).

228 The emended य in the पूर्वार्ध is quite necessary but we can dispense with the emendment पंच and take the stanza to be an example of उपगीति, also called गाथ.

229 पंचदिणो—Is पंचविहो not more fitting?

The five categories, to wit, उद्दिट्ट, अमिट्ट, भामिद्द, संजमागओ

and अत्थमिओ resemble somewhat with the five types of the planets known in Astrology, namely, बाल, कुमार, तरुण, वृद्ध and मृत. The author has described here five types of the स्वर, namely, नामस्वर ( st. 229 ), जन्मस्वर ( st. 230 ), गर्भस्वर ( st. 230 ), मासस्वर ( sts. 230—235 ) and राशिस्वर ( st. 236 ). compare the मासस्वरचक्र of the text with that of *NJC* and note the fundamental difference :-

नभस्य मार्गवैशाखे ह्रस्वरस्योदयो भवेत् ।
आश्विनश्रावणाषाढेष्विकारो नायकः स्मृतः ॥ १ ॥
उकारश्चैत्रपौषे स्यादेकारो ज्येष्ठकार्त्तिके ।
ओकार उदयं याति माघफाल्गुनमासयोः ॥ २ ॥
द्वे दिने घ्यब्धयो नाड्यश्चाष्टात्रिंशत् पलानि च ।
अंतरोदययुक्तोऽसावत्र वै मासिकस्वरे ॥ ३ ॥

इति यामले मासस्वरचक्रम्. (p. 19).

233 If we do not emend the stanza, it represents a variety of the गाथा called उपगीति which is also known as गाथ.

235 सावणसिअपक्खस्स—This shows that the author is in favour of the *Pūrṇimānta* months. As this usage was current in the North, it supports our inference that the author, in all probability, must have flourished in the North. JACOBI says to the effect that in connection with the Śaka Saṁvat, the *Amānta* months were generally made use of. The Śaka Saṁvat was the generally accepted Saṁvat of the southerners and the months in the system of the Śaka Saṁvat were almost always *Amānta.*• ( See *Samarāiccakahā, Bibliotheca Indica Series,* Vol. 169, 1926, Intro. p. 2 as quoted from the Indian Antiquary, 1896, p. 271, footnote ).

236 रासिसरो—The *NJC* gives a different description of the राशिस्वरचक्र :-

मेषवृषावकारे च मिथुनाद्याः षडंशकाः ।
मिथुनांशत्रयं चैवमिकारे सिंहकर्कटौ ॥ १ ॥
कन्यातुला उकारे च वृश्चिकाद्यास्त्रयोंऽशकाः ।
एकारे वृश्चिकांत्यांशाश्चापः षट् च मृगादिमाः ॥ २ ॥
अंशास्त्रयो मृगस्यांत्याः कुंभमीनौ तथौस्वरे ।
एवं राशिस्वरः प्रोक्तो नवांशकक्रमोदयः ॥ ३ ॥ (p. 14).

237 पंच वि—The items enumerated are four, namely, नक्खत्तं, रासी, वग्गं and तिही. The numeral used is पंच; thus there is

anomaly. The *JC* includes the सर at the time of describing the scheme of the *Sarvatobhadracakra.* Thus the first half of the stanza can be emended as below to make it agreeable with the tradition of *JC* which is certainly authoritative:-

नक्खत्तं सर रासी वग्गं तह [य] तिही [य] वियाणेह ।

The *NJC* also corroborates the tradition embodied in *JC* through the following words:-

नक्षत्रेऽस्ते रुजो वर्णे हानिः शोकः स्वरेऽस्तगे ।
राशौ विघ्नं तिथौ भीतिः पञ्चास्ते मरणं ध्रुवम् ॥ ४१ ॥ (p. 63).

It is also worth noting that the word वग्गं used in the text may be wrong though it uses the word वग्ग in st. 227. It may perhaps be वण्णं.

238 अवकहडाचक्के—Looking to the contents of the formula, it appears that the name given to it is incorrect. The contents are those of the *Sarvatobhadracakra.* Compare the following stanzas of *NJC* with those of the text:-

अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम् ।
विख्यातं सर्वतोभद्रं सद्यः प्रत्ययकारकम् ॥ १ ॥

ऊर्ध्वगा दश विन्यस्य तिर्यग्रेखास्तथा दश ।
एकाशीतिपदं चक्रं जायते नात्र संशयः ॥ २ ॥

अकारादिस्वराः कोष्ठेष्वीशादिविदिक्षु क्रमात् ।
सृष्टिमार्गेण दातव्याः षोडशैवं चतुर्भ्रमम् ॥ ३ ॥

कृत्तिकादीनि धिष्ण्यानि पूर्वाशादि लिखेत् क्रमात् ।
सप्त सप्त क्रमादेतान्यष्टाविंशतिसंख्यया ॥ ४ ॥

अवकहडादि प्राच्यां मटपरताश्च दक्षिणे ।
नयभजखाश्च वारुण्यां गसदचलास्तथोत्तरे ॥ ५ ॥

अयवयो वृषाद्याश्च पूर्वाशादिक्रमाद्बुधैः ।
राशयो द्वादशैवं तु मेषान्ताः सृष्टिमार्गतः ॥ ६ ॥

शेषेषु कोष्ठकेष्वेवं नंदादितिथिपञ्चकम् ।
वाराणां सप्तकं लेख्यं भौमादित्यक्रमेण च ॥ ७ ॥

भौमादित्यौ च नंदायां भद्रायां बुधशीतगू ।
जयायां च गुरुः प्रोक्तो रिक्तायां भार्गवस्तथा ॥ ८ ॥

पूर्णायां शनिवारश्च लेख्यं चक्रेऽत्र निश्चितम् ।
इत्येष सर्वतोभद्रविस्तरः कीर्तितो मया ॥ ९ ॥

(pp. 55, 56).

॥ अथ सर्वतोभद्रचक्रम् ॥

| अ | कृ | रो | मृ | आ | पु | पु | श्ले | आ |
|---|---|---|---|---|---|---|---|---|
| भ | उ | अ | व | क | ह | ड | ऊ | म |
| अ | ल | लृ | वृ | मि | क | लृ | म | पू |
| रे | च | मे | ओ | १ ६ ११ र मं | औ | सिं | ट | उ |
| उ | द | मी | ४ ९ १४ शु | ५ १० १५ श | २ ७ १२ चं बु | क | प | ह |
| पू | स | कुं | अः | ३ ८ १३ गु | अं | तु | र | चि |
| श | ग | ऐ | म | ध | वृ | ए | त | स्वा |
| 'ध | ऋ | ख | ज | भ | य | न | ॠ | वि |
| ई | श्र | अ | उ | पू | मू | ज्ये | अ | इ |

(p. 58).

Looking to the contents of the *Avakahaḍācakra* and the *Sarvatobhadracakra*, it is crystal clear that both the diagrams are different and the scheme outlined in our text tallies completely with that of the latter. This scheme finds full support from *JC* also (pp. 86–87).

Thus I repeat once more my conclusion arrived at in the Introduction that Durgadeva is a representative of an altogether different tradition the origin of which lies buried in some ancient and authoritative trend of thought perhaps preserved in the *Maraṇakaṇḍikā* on which, he plainly admits, he has largely drawn. The author is certainly not a man of insignificance. The *Saṇicakka*, the *Nāḍīcakka*, the *Avakahaḍācakka* (properly called the *Sarvatobhadracakra*), the *Ayacakka*, the *Saracakka*, and many other statements to which I have drawn attention at proper places in the Introduction or Notes clearly reveal the author's belonging to a school of thought which is different, in most of the points, from a generally accepted and followed school of thought.

Moreover the word अवकहडाचक्के in the stanza is metrically quite fitting. Thus what is meant here by the author through the *Avakahaḍācakka* is what is believed by the orthodox school by the *Sarvatobhadra-cakra.* We can, I honestly think, never dismiss this point by simply saying that the author has made a mistake. There may come out MSS. which may remove some trivial drawbacks but with regard to his belonging to a distinctly new tradition, there is no doubt even if MSS. come out.

In stanzas, from 198 to 240, the author has beautifully compressed the होराप्रश्न which is really complex. He now handles the लग्नप्रश्न in the following three stanzas.

240 लग्गं—The sts. 240, 241 and 242 deal with the लग्नप्रश्न. To get a rather detailed idea compare and contrast these three sts. with the seven sts., from 201 to 207, of the *YS'* (App. XIII). For astrological interpretation also see *SBE*, Vol. 3, 350 n.

243 हवंति पउरदियहाइं of P does not fit in with the context. I have given below the interpretation of the *Bhaiṣajya-ratnāvalī* (Ed. Kavirāja Vinodelal Sen, Calcutta), on the point :-

कृत्तिकायां यदा व्याधिरुत्पन्नो भवति स्वयम् ।
नवरात्रं भवेत्पीडा त्रिरात्रं रोहिणीषु च ॥
मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः ।
पुनर्वसौ तथा पुष्ये सप्तरात्रेण मोचनम् ॥
नवरात्रं तथाऽऽश्लेषे श्मशानान्तं मघासु च ।
द्वौ मासौ पूर्वफल्गुण्यामुत्तरासु त्रिपञ्चकम् ॥
हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम् ।
मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः ॥
मित्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम् ।
मूलेन जायते मोक्षः पूर्वाषाढे त्रिपञ्चकम् ॥
उत्तरे दिनविंशत्या द्वौ मासौ श्रवणे तथा ।
धनिष्ठायामर्द्धमासो वारुणे च दशाहकम् ॥
पूर्वभाद्रपदे देवि ऊनविंशतिवासरम् ।
त्रिपक्षञ्चाहिर्बुध्न्ये च रेवत्यां दशरात्रकम् ॥
अहोरात्रं तथाऽश्विन्यां भरण्यां तु गतायुषः ।
एवं क्रमेण जानीयान्नक्षत्रेषु यथोचितम् ॥

इति गौरीकञ्चुलिकायाम्. (pp. 105-106).

By comparing we find that both the descriptions do not agree even in one item. Thus it further corroborates my hypothesis that the author is a representative of an altogether different tradition as I have proved in the Introduction and also heretofore in the Notes.

246 The second half of the stanza is metrically defective.

250 रेवइदिअहे समुद्दिट्ठे is grammatically not a happy expression. रेवइदिअहा समुद्दिट्ठा would have been correct.

252 रि(दि°)ट्ठंरिट्ठो—The anusvāra is there because of metrical necessity.

अणसणं—Even if one has glimpses of evil, it cannot be averted. Then why not face it boldly? In other words, when one gets prognostications of death, he should patiently undertakc to fast unto death. Compare the following stanza of *PSU*:-

धीरेण वि मरियव्वं कापुरिसेण वि अवस्स मरियव्वं ।
तम्हा अवस्समरणे वरं खु धीरत्तणे मरिउं ॥

(p. 301)

254 जयउं—A transcript of the following eight Sts. provided by Pt. Jugalkishoreji could not solve my difficulties as the MS. which he has got seems to be of the P type.

255 [संजम] देवस्स—The lacuna cannot be more fittingly filled up.

256 वरिट्ठं—The *PV* allows the dropping of initial अ as in अलाबू and अरण्य (See 1, 66). विरिट्ठं also is equally tenable.

257 °इम—It seems a scribal error of a metathetical nature. So I have emended it accordingly.

पंचंग-सद्दागमी would have been certainly more welcome.

इहं—The anusvāra is there to meet metrical demands.

258 वागीसरायण्णओ—This Tatpuruṣa compound which is of the type of कृष्णश्रित can be solved as वागीश्वरमापन्नः ।

259 मही सा मही etc. This and the phrase जा नायं (?) च सुरा णभो तिपहुगा do not yield satisfactory meaning though the sense is somewhat like this:-

So long as there is this earth owned by kings as well as there are the snake (शेषनाग), the gods, the sky and the Ganges (in this case तिपहुगा will have to be emended by तिपहगा).

नायं can also mean heaven.

Compare the following stanza of *YR*:-

यावद्व्योमनि बिम्बमम्बरमणेरिन्दोश्च विद्योतते
यावत्सप्त पयोधयः सगिरयस्तिष्ठन्ति पृष्ठे भुवः ।

यावद्यावनिमण्डलं फणिपतेरास्ते फणामण्डले
तावत्सद्भिषजः पठन्तु परितः श्रीयोगरत्नाकरम् ॥ २ ॥

(p. 455)

261 सिरिकुंभनयरण[य]ए—See Introduction. It can be identified with कुंभेरगढ near Bharatpur. See Samśodhaka, Vol. 11, 1998.

At the end, there are seven more Dvāragāthās to be found only in P. This is why I have excluded them from the text. Still however, I have given them below for the sake of information :-

देवय १ लक्खण २ उवस्सुइ ३ छाया ४ नाडी ५ निमित्त ६ जोइसओ ७ ।
सुविणग ८ अरिट्ठ ९ जंतप्पओग १० विज्जाहिं ११ कालगमो ॥ १ ॥

द्वारगाथेयं.

अंगुट्ठखग्गदप्पणकुड्डाइसु पवरविज्जसत्तीए ।
अवयारिआ विहीए तहाविहा देवया कावि ॥ २ ॥

साहिज्ज पुच्छिअत्थं नवरं विहिणा दढं सुइब्भूओ ।
निच्चलमणो सरिज्जा विज्जं तद्देवयाहवणिं ॥ ३ ॥

विज्जा इत्थं पुण ॐ नरवर ठवइ मत्ति नायव्वा ।
रविससिगहणे एसा अट्ठुत्तरदससहस्साण ॥ ४ ॥

जावेण साहिअट्ठा अह संपत्तम्मि कज्जकालम्मि ।
अंगुट्ठाइसु लीभइ अट्ठुत्तरसहस्सजावेण ॥ ५ ॥

तत्तो कुमारिआओ वंछिअमत्थं निअंति निब्भंतं ।
सम्मत्तनिच्चलाणं नवरं वंछिअकरी एसा ॥ ६ ॥

अहव सयं च्चिय सक्खा अक्खित्तमणा गुणेहि खवगस्स ।
तं नत्थि जं न साहइ कित्तिअमिह मरणकालं उ ॥ ७ ॥

# APPENDIX

I From *AV*:—

स्वप्नं सुप्त्वा यदि पश्यासि पापं मृगः सृतिं यति धावादजुष्टाम् ।
परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते ॥ ६ ॥
अरात्यास्त्वा निर्ऋत्या अभिचारादथो भयात् ।
मृत्योरोजीयसो वधाद् वरणो वारयिष्यते ॥ ७ ॥ (10,3,6-7 ; p.146)

II From *AA*:—

तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षळृचं तमसस्परीत्येका । अथापि यत्र छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वा शिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि संपतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात्स एषो अग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात्तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवामेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात् । इति प्रत्यक्षदर्शनानि । अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वापगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति । स यद्येतेषां किञ्चित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात् । (3, 2, 4; pp. 135ff)

III From *ON*:—

नंदीतूरं पुण्णस्स दंसणं संखपडहसद्दो य ।
भिंगारछत्तचामरधयप्पडागा पसत्थाइं ॥ १०९ ॥
समणं संजयं दंतं सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च सिद्धमत्थं वियागरे ॥ ११० ॥

IV From *MBh*:—

योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन ।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ॥ ९ ॥

खण्डाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ।
परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ॥ १० ॥
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः ।
अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा ॥ ११ ॥

× × ×

5 कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ।
ऊर्णनाभेर्यथा चक्रं छिद्रं सोमं प्रपश्यति ॥ १३ ॥
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ।
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ॥ १४ ॥
देवतायतनस्थस्तु सप्तरात्रेण मृत्युभाक् ।
10 कर्णनासावनमनं दन्तदृष्टिविरागिता ॥ १५ ॥

(XII. (शांतिपर्व), 317th Adhyāya; p. 643)

V. From *VP*:—

वायुरुवाच—

बध्येद्वायसपङ्क्तीभिः पांशुवर्षेण वा पुनः ।
15 छायां वा विकृतां पश्येच्चतुः पञ्च स जीवति ॥ ७ ॥

× × ×

अप्सु वा यदि वाऽऽदर्शे आत्मानं यो न पश्यति ।
अशिरस्कं तथाऽऽत्मानं मासादूर्ध्वं न जीवति ॥ ९ ॥

× × ×

(*यस्य वै स्नातमात्रस्य हृत्पादं वाऽवशुष्यति ।
धूमो (मं) वा मस्तकान्नश्ये (त्पश्ये) द्दशाहं न स जीवति) ॥ ११ ॥

× × ×

20 भूयो भूयः श्वसेद्यस्तु रात्रौ वा यदि वा दिवा ।
दीपगन्धं च नो वेत्ति विद्यान्मृत्युमुपस्थितम् ॥ २१ ॥

× × ×

मुक्तकेशो हसंश्चैव गायन्नृत्यंश्च यो नरः ।
याम्याशाभिमुखो गच्छेत्तदन्तं तस्य जीवितम् ॥ २५ ॥

× × ×

द्वे चात्र परमे रिष्टे एतद्रूपं परं भवेत् ।
25 घोषं न शृणुयात्कर्णे ज्योतिर्नेत्रे न पश्यति ॥ २८ ॥

..

ऊर्ध्वा च दृष्टिर्न च संप्रतिष्ठा रक्ता पुनः संपरिवर्तमाना ।
मुखस्य चोष्मा शुषिरा च नाभिरत्युष्णमूत्रो विषमस्थ एव ॥ ३० ॥

(19th Adhyāya; pp. 49–51)

VI From *MatP*:—

30 मत्स्य उवाच—

शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥ ९ ॥

हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ॥ ११ ॥

× × ×

नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम् ।
स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ॥ १७ ॥
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके ।
चतुर्थे मासमात्रेण पश्यतो नात्र संशयः ॥ १८ ॥
अरुणोदयवेलायां दशाहेन फलं भवेत् ।
एकस्यां यदि चा रात्रौ शुभं वा यदि वाऽशुभम् ॥ १९ ॥

(242nd Adhyāya)

मत्स्य उवाच—

इन्धनं च तथाऽङ्गारं गुडं तैलं तथाऽशुभम् ।
अभ्यक्तं मलिनं मुण्डं तथा नग्नं च मानवम् ॥ ३ ॥

× × ×

निर्गतस्य तु द्वारादौ शिरसश्चाभिघातिता ।
छत्रध्वजानां वस्त्राणां पतनं च तथाऽशुभम् ॥ १२ ॥

× × ×

गणिका च महाभाग दूर्वा चाऽऽर्द्रं च गोमयम् ।
रुक्मं रूप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥ १७ ॥
औषधानि च धर्मज्ञ यवाः सिद्धार्थकास्तथा ।
नृवाह्यमानं यानं च भद्रपीठं तथैव च ॥ १८ ॥
खड्गं छत्रं पताका च मृदश्चाऽऽयुधमेव च ।
राजलिङ्गानि सर्वाणि शिवं रुदितवर्जितम् ॥ १९ ॥
घृतं दधि पयश्चैव फलानि विविधानि च ।
स्वस्तिकं वर्धमानं च नन्द्यावर्तं सकौस्तुभम् ॥ २० ॥

(243rd Adhyāya)

VII From *YS*:—

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥

अरिष्टेभ्यो वेति । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राऽऽध्यात्मिकं घोषं स्वदेहे पिहितकर्णो न शृणोति, ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति तथाऽऽधिभौतिकं यमपुरुषान् पश्यति, पितृनतीतानकस्मात्पश्यति । तथाऽऽधिदैविकं स्वर्गमकस्मात्सिद्धान्वा पश्यति । विपरीतं वा सर्वमिति । अनेन वा जानात्यपरान्तमुपस्थितमिति ॥ २२ ॥ व्यासभाष्य.

प्रासङ्गिकमाह—अरिष्टेभ्यो वा । अरिवत्त्रासयन्तीत्यरिष्टानि त्रिविधानि मरणचिन्हानि । विपरीतं वा सर्वं माहेन्द्रजालादिव्यतिरेकेण ग्रामनगरादि स्वर्गमभिमन्यते, मनुष्यलोकमेव देवलोकमिति ॥ २२ ॥ वाचस्पत्या.

अरिष्टेभ्यो वा । अरिष्टानि त्रिविधानि–आध्यात्मिकाधिभौतिकाधिदैविकभेदेन तत्राऽऽध्यात्मिकानि पिहितकर्मण : कोष्ठ्यस्य वायोर्घोषं न शृणोतीत्येवमादीनि ।

आधिभौतिकान्यकस्माद्विकृतपुरुषदर्शनादीनि आधिदैविकान्यकाण्ड एव द्रष्टुमशक्य-स्वर्गादिपदार्थदर्शनादीनि । तेभ्यः शरीरवियोगकालं जानाति । भोजदेवीया.
(3, 22; pp. 147 and 38).

VIII From *MP*:—

5 भन्ते नागसेन, इमस्मि लोके नरनारीयो सुपिणं पस्सन्ति कल्याणम्पि, पापकम्पि, दिट्ठपुब्बम्पि, अदिट्ठपुब्बम्पि, कटपुब्बंपि, अकटपुब्बंपि, खेमम्पि, सभयम्पि, दूरे पि, संतिके पि, बहुविधानि पि, अनेकवण्णसहस्सानि दिस्सन्ति । किञ्च एतं सुपिणं नाम को च एतं पस्सतीति । — निमित्तमेतं महाराज सुपिणं नाम यं चित्तस्स आपाथमुपगच्छति च य इमे महाराज सुपिणं पस्सन्तिः 10 वातिको सुपिणं पस्सति, पित्तिको सुपिणं पस्सति, सेम्हिको सुपिणं पस्सति, देवतूपसंहारतो सुपिणं पस्सति, समुदाचिण्णतो सुपिणं पस्सति, पुब्बनिमित्ततो सुपिणं पस्सति तत्र महाराज यं पुब्बनिमित्ततो सुपिणं पस्सति तं येव सच्चं अवसेसं मिच्छा ति । — भन्ते नागसेन, यो पुब्बनिमित्ततो सुपिणं पस्सति, किं तस्स चित्तं सयं गंत्वा तं निमित्तं विचिनाति, तं वा निमित्तं चित्तस्स 15 आपाथमुपागच्छति, अञ्ञो वा आगंत्वा तस्स आरोचेतीति । — न महाराज तस्स चित्तं सयं गंत्वा तं निमित्तं विचिणाति, नापि अञ्ञो कोचि आगंत्वा तस्स आराचेति, अथ रवो तं येव निमित्तं चित्तस्स आपाथमुपागच्छति । यथा महाराज आडासो न सयं कुहिञ्चि गंत्वा छायं विचिनाति, नापि अञ्ञो कोचि छायं आनेत्वा आडासं आरोपेति, अथ रवो यतो कुतोचि छाया आगंत्वा 20 आडासस्स आपाथमुपागच्छति; एवमेव रवो महाराज न तस्स चित्तं सयं गंत्वा तं निमित्तं विचिनाति, नापि अञ्ञो कोचि आगंत्वा आरोचेति, अथ रवो यतो कुतोचि निमित्तं आगंत्वा चित्तस्स आपाथमुपागच्छतीति ।

भन्ते नागसेन, यं तं चित्तं सुपिणं पस्सति, अपि नु तं चित्तं जानातिः एवं नाम विपाको भविस्सति खेमं वा भयं वा ति । — नहि महाराज तं चित्तं 25 जानातिः एवं विपाको भविस्सति खेमं वा भयं वा ति; निमित्ते पन उप्पन्ने अञ्ञ्येसं कथेति, ततो ते अत्थं कथेन्तीति । — इंघ भंते नागसेन कारणं दस्सेहीति । — यथा महाराज सरीरे तिलका पिळका दद्दूनि उट्ठहन्ति लाभाय वा अलाभाय वा यसाय वा अयसाय वा निन्दाय वा पसंसाय वा दुक्खाय वा, अपि नु ता महाराज [तिलका] पिळका जानित्वा उप्पज्जन्तिः इमं नाम 30 मयं अत्थं निप्फादेस्सामाति । — नहि भन्ते, यादिसे ता ओकासे पिळका संभवन्ति, तत्थ ता पिळका दिस्वा नेमित्तका व्याकरोन्ति; एवं नाम विपाको भविस्सतीति । — एवमेव रवो महाराज यन्तं चित्तं सुपिणं पस्सति न तं चित्तं जानाति एवं नाम विपाको भविस्सति खेमं वा भयं वा ति; निमित्ते पन उप्पन्ने अञ्ञेसं कथेति, ततो ते अत्थं कहेन्तीति । (pp. 297—301)

35 IX from *KS*:—

कुक्षिः स्नातानुलिप्तस्य पूर्वं यस्य विशुष्यति ।
आर्द्रेषु सर्वगात्रेषु मासार्धं तस्य जीवितम् ॥ ७ ॥

× × ×

शयनं शोणिताक्तं वा तत्रापि स्कन्दतो भयम् ।
रक्तपुष्पाम्बरधरा रक्तचन्दनरूषिता ॥ १४ ॥
नृत्यते सह भूतैर्वा स्कन्दापस्मारतो भयम् ।
रक्तपद्मवनं प्राप्य धात्र्यात्मानं यदाऽर्चति ॥ १५ ॥

× × ×

कीटवृश्चिकसर्पैर्वा दष्टः स्याद्विषमृत्युकः ।
श्वभिर्दुष्टैः खरैर्वाऽपि दक्षिणां याति मुण्डितः ॥ २२ ॥
कृष्यते मृद्यते तैर्वा ज्वरस्यान्तस्तदुच्यते ।
प्रार्थितं कल्पितं दृष्टमनुभूतं श्रुतं च यत् ॥ २३ ॥

× × ×

मलिनाम्बरपुष्पाणां दर्शनं न प्रशस्यते ।
तेषामेव तु हृष्टानां शुद्धपुष्पाम्बरात्मनाम् ॥ २८ ॥

× × ×

रोदनं पतितोत्थानं रिपूणां निग्रहस्तथा ।
पङ्ककूपगुहाभ्यश्च समुत्तारोऽध्वनस्तथा ॥ ३३ ॥

× × ×

इति ह स्माह भगवान् कश्यपः ॥

(pp. 59—61)

X From *CS*:—

मक्षिकाश्चैव यूकाश्च दंशाश्च मशकैः सह ।
निरसाद्‌पसर्पन्ति जन्तोः कायान्मुमूर्षतः ॥ २१ ॥
अत्यर्थरसिकं कायं कालपक्वस्य मक्षिकाः ।
अपि स्नातानुलिप्तस्य भृशमायान्ति सर्वशः ॥ २२ ॥

(द्वितीयोऽध्यायः)

तस्य चेदुच्छ्‌वासोऽतिदीर्घोऽतिह्रस्वो वा स्यात् परासुरिति विद्यात् । तस्य चेद्दन्ताः परिकीर्णाः श्वेता जातशर्कराः स्युः, परासुरिति विद्यात् । ............................................................ तस्य चेन्नखा वीतमांसशोणिताः पक्वजाम्बववर्णाः स्युः परासुरिति विद्यात् । अथास्याङ्गुलीरायच्छेत्; तस्य चेदङ्गुलय आयम्यमाना न स्फुटेयुः परासुरिति विद्यात् ॥ ६ ॥ (तृतीयोऽध्यायः)

संवृत्याङ्गुलिभिः कर्णौ ज्वालाशब्दं य आतुरः ।
न शृणोति गतासुं तं बुद्धिमान् परिवर्जयेत् ॥ २० ॥

(चतुर्थोऽध्यायः)

श्वभिरुष्ट्रैः खरैर्वाऽपि याति यो दक्षिणां दिशम् ।
स्वप्ने यक्ष्माणमासाद्य जीवितं स विमुञ्चति ॥ ८ ॥

× × ×

इन्द्रचन्द्रार्कनक्षत्रदेवतादीपचक्षुषाम् ।
पतनं वा विनाशो वा स्वप्ने भेदो नगस्य वा ॥ ३५ ॥

× × ×

रक्तमाली हसन्नुच्चैर्दिग्वासा दक्षिणां दिशम् ।
दारुणामटवीं स्वप्ने कपियुक्तेन याति वा ॥ ३७ ॥

(पञ्चमोऽध्यायः)

ज्योत्स्नायामातपे दीपे सलिलादर्शयोरपि ।
अङ्गेषु विकृता यस्यछाया प्रेतस्तथैव सः ॥ ४ ॥
छिन्ना भिन्नाऽऽकुलाछाया हीना वाऽप्यधिकाऽपि वा ।
नष्टा तन्वी द्विधा छिन्ना विकृता विशिरा च या ॥ ५ ॥
एताश्चान्याश्च याः काश्चित् प्रतिच्छाया विगर्हिताः ।
सर्वा मुमूर्षतां ज्ञेया न चेल्लक्ष्यनिमित्तजाः ॥ ६ ॥
संस्थानेन प्रमाणेन वर्णेन प्रभया तथा ।
छाया विवर्तते यस्य स्वस्थोऽपि प्रेत एव सः ॥ ७ ॥
संस्थानमाकृतिर्ज्ञेया सुषमा विषमा च सा ।
मध्यमल्पं महच्चोक्तं प्रमाणं त्रिविधं नृणाम् ॥ ८ ॥
प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु ।
छाया या सा प्रतिच्छाया छाया वर्णप्रभाश्रया ॥ ९ ॥

× × ×

प्रकूजति प्रश्वसिति शिथिलं चातिसार्यते ।
बलहीनः पिपासार्तः शुष्कास्यो न स जीवति ॥ २४ ॥

(सप्तमोऽध्यायः)

ग्लायते नासिकावंशः पृथुत्वं यस्य गच्छति ।
अशूनः शूनसंकाशः प्रत्याख्येयः स जानता ॥ १० ॥

(अष्टमोऽध्यायः)

शरीरकंपः संमोहो गतिर्वचनमेव च ।
मत्तस्येवोपलभ्यन्ते यस्य मासं न जीवति ॥ १० ॥

× × ×

अहास्यहासी संमुह्यन् प्रलेढि दशनच्छदौ ।
शीतपादकरोच्छ्वासो यो नरो न स जीवति ॥ २० ॥

(एकादशोऽध्यायः)

चैत्यध्वजपताकानां पूर्णानां पतनानि च ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांशुभिः ॥ २८ ॥
पथच्छेदो बिडालेन शुना सर्पेण वा पुनः ।
मृगद्विजानां क्रूराणां गिरो दीप्तां दिशं प्रति ॥ २९ ॥
शयनासनयानानामुत्तानानां च दर्शनम् ।
इत्येतान्यप्रशस्तानि सर्वाण्याहुर्मनीषिणः ॥ ३० ॥

× × ×

ऊष्माणः प्रलयं यान्ति विश्लेषं यान्ति संधयः ।
गन्धा विकृतिमायान्ति भेदं वर्णस्वरौ तथा ॥ ५१ ॥
वैवर्ण्यं भजते कायः कायच्छिद्रं विशुष्यति ।
धूमः संजायते मूर्ध्नि दारुणाख्यश्च चूर्णकः ॥ ५२ ॥

× × ×

दध्यक्षतद्विजातीनां वृषभाणां नृपस्य च ।
रत्नानां पूर्णकुम्भानां सितस्य तुरगस्य च ॥ ७१ ॥
सुरध्वजपताकानां फलानां यावकस्य च ।
कन्यापुंवर्धमानानां बद्धस्यैकपशोस्तथा ॥ ७२ ॥
पृथिव्या उद्धृतायाश्च वह्नेः प्रज्वलितस्य च । 5
मोदकानां सुमनसां शुक्लानां चन्दनस्य च ॥ ७३ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रियास्तथा ॥ ७४ ॥
जीवञ्जीवकसिद्धार्थसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां चाषाणां शिखिनां तथा ॥ ७५ ॥ 10
मत्स्याजद्विजशङ्खानां प्रियङ्गूनां घृतस्य च ।
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥ ७६ ॥
गन्धः सुरभिर्वर्णश्च सुशुक्लो मधुरो रसः ।
मृगपक्षिमनुष्याणां प्रशस्ताश्च गिरः शुभाः ॥ ७७ ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः । 15
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिस्वनाः ॥ ७८ ॥
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे तु विद्यादारोग्यलक्षणम् ॥ ७९ ॥

× × ×

गृहप्रासादशैलानां नागानामृषभस्य च ।
हयानां पुरुषाणां च स्वप्ने समधिरोहणम् ॥ ८२ ॥ 20
सोमार्काग्निद्विजातीनां गवां नृणां पयस्विनाम् ।
अर्णवानां प्रतरणं वृद्धिः संबाधनिःसृतिः ॥ ८३ ॥
स्वप्ने देवैः सपितृभिः प्रसन्नैश्चाभिभाषणम् ।
दर्शनं शुक्लवस्त्राणां ह्रदस्य विमलस्य च ॥ ८४ ॥
मांसमत्स्यविषामेध्यच्छत्रादर्शपरिग्रहः । 25
स्वप्ने सुमनसां चैव शुक्लानां दर्शनं शुभम् ॥ ८५ ॥
अश्वगोरथयानं च यानं पूर्वोत्तरेण च ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ८६ ॥

(द्वादशोऽध्यायः)

(इन्द्रियस्थानम्—pp. 353-375) 30

XI From *SS*:—

सुहृदो यांश्च पश्यन्ति व्याधितो वा स्वयं तथा ।
स्नेहाभ्यक्तशरीरस्तु करभव्यालगर्दभैः ॥ ५५ ॥
वराहैर्महिषैर्वाऽपि यो यायाद्दक्षिणामुखः ।
रक्ताम्बरधरा कृष्णा हसन्ती मुक्तमूर्धजा ॥ ५६ ॥ 35

× × ×

पिबेन्मधु च तैलं च यो वा पङ्केऽवसीदति ।
पङ्कप्रदिग्धगात्रो वा प्रनृत्येत् प्रहसेत्तथा ॥ ५९ ॥

× × ×

पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ।
यः पश्येद्देवतानां वा प्रकम्पमवनेस्तथा ॥ ६३ ॥
यस्य छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ।
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ॥ ६४ ॥

× × ×

5 समिद्धमग्निं साधूंश्च निर्मलानि जलानि च ।
पश्येत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७६ ॥
मांसं मत्स्यान् स्रजः श्वेता वासांसि च फलानि च ।
लभेत धनलाभाय व्याधेरपगमाय च ॥ ७७ ॥

(नवविंशतितमोऽध्यायः)

10 XII From *VS*:—

क्रोष्टुकोलकहारीतकाककोकर्क्षपिङ्गलाः ।
कपोतरुदिताक्रन्दक्रूरशब्दाश्च याम्यतः ॥ २१ ॥
गोशशक्रौञ्चलोमाशहंसोत्क्रोशकपिञ्जलाः ।
बिडालोत्सववादित्रगीतहासाश्च वारुणाः ॥ २२ ॥
15 शतपत्रकुरङ्गाखुमृगैकशफकोकिलाः ।
चाषशल्यकपुण्याहघण्टाशंखरवा उदक् ॥ २३ ॥

× × ×

शिवा श्यामा रला छुच्छुः पिङ्गला गृहगोधिका ।
सूकरी परपुष्टा च पुन्नामानश्च वामतः ॥ ३७ ॥
स्त्रीसंज्ञा भासभषककपिश्रीकर्णछिक्कराः ।
20 शिखिश्रीकण्ठपिप्पीकरुरुश्येनाश्च दक्षिणाः ॥ ३८ ॥

× × ×

रुतकीर्तनदृष्टेषु भारद्वाजाजबर्हिणः ।
धन्या नकुलचाषौ च सरटः पापदोऽग्रतः ॥ ४१ ॥

× × ×

श्रेष्ठे हयसिते प्राच्यां शवमांसे च दक्षिणे ।
कन्यका दधिनी पश्चादुदग्गोविप्रसाधवः ॥ ४५ ॥

25 (षडशीतितमोऽध्यायः)

XIII From *YS'*:—

प्रतिपद्दिवसे कालचक्रज्ञानाय शौचवान् ।
आत्मनो दक्षिणं पाणिं शुक्लं पक्षं प्रकल्पयेत् ॥ १२९ ॥
30 अधोमध्योर्ध्वपर्वाणि कनिष्ठांगुलिकानि तु ।
क्रमेण प्रतिपत्षष्ठ्येकादशीः कल्पयेत्तिथीः ॥ १३० ॥
अवशेषांगुलीपर्वाण्यवशेषतिथीस्तथा ।
पंचमी दशमी राका पर्वाण्यंगुष्ठगानि तु ॥ १३१ ॥
वामपाणिं कृष्णपक्षतिथीस्तद्वच्च कल्पयेत् ।
ततश्च निर्जने देशे बद्धपद्मासनः सुधीः ॥ १३२ ॥

प्रसन्नः सितसंव्यानः कोशीकृत्य करद्वयम् ।
ततस्तदंतः शून्यं तु कृष्णवर्णं विचिंतयेत् ॥ १३३ ॥
उद्घाटितकरांभोजस्ततो यत्रांगुलीतिथौ ।
वीक्ष्यते कालबिंदुः स काल इत्यत्र कीर्त्यते ॥ १३४ ॥

× × ×

स्वप्ने स्वं भक्ष्यमाणं च गृध्रकाकनिशाचरैः । 5
उह्यमानं खरोष्ट्राद्यैर्यदा पश्येत्तदा मृतिः ॥ १३७ ॥

× × ×

छर्दिमूत्रपुरीषं वा सुवर्णरजतानि वा ।
स्वप्ने पश्येद्यदि तदा मासान्नवैव जीवति ॥ १४० ॥
स्थूलोऽकस्मात्कृशोऽकस्मादकस्मादतिकोपनः ।
अकस्मादतिभीरुर्वा मासानष्टैव जीवति ॥ १४१ ॥ 10

× × ×

स्वप्ने मुंडितमभ्यक्तं रक्तगंधस्रगंबरम् ।
पश्येद्याम्यां खरं यांतं स्वं योऽब्दार्धं स जीवति ॥ १५१ ॥

× × ×

इंदुमुष्णं रविं शीतं छिद्रं भूमौ रवावपि ।
जिह्वां श्यामां मुखं कोकनदाभं च यदेक्षते ॥ १५६ ॥
तालुकंपो मनःशोको वर्णोऽगेऽनेकदा यदा । 15
नाभेश्चाकस्मिकी हिक्का मृत्युर्मासद्वयात्तदा ॥ १५७ ॥
जिह्वा नास्वादमादत्ते मुहुः स्खलति भाषणे ।
श्रोत्रे न शृणुतः शब्दं गंधं वेत्ति न नासिका ॥ १५८ ॥
स्पंदेते नयने नित्यं दृष्टवस्तुन्यपि भ्रमः ।
नक्तमिंद्रधनुः पश्येत् तथोल्कापतनं दिवा ॥ १५९ ॥ 20
न च्छायामात्मनः पश्येत् दर्पणे सलिलेऽपि वा ।
अनब्दां विद्युतं पश्येत् शिरोऽकस्मादपि ज्वलेत् ॥ १६० ॥
हंसकाकमयूराणां पश्येच्च क्वापि संहतिम् ।
शीतोष्णखरमृद्वादेरपि स्पर्शं न वेत्ति च ॥ १६१ ॥
अमीषां लक्ष्मणां मध्याद्यदैकमपि दृश्यते । 25
जंतोर्भवति मासेन तदा मृत्युर्न संशयः ॥ १६२ ॥
शीते हकारे फुत्कारे चोष्णे स्मृतिगतिक्षये ।
अंगपंचकशैत्ये च स्याद्दशाहेन पंचता ॥ १६३ ॥

× × ×

स्नातमात्रस्य हृत्पादं तत्क्षणाद्यदि शुष्यति ।
दिवसे जायते षष्ठे तदा मृत्युरसंशयम् ॥ १६५ ॥ 30

× × ×

न स्वनासां स्वजिह्वां न ग्रहानामला दिशः ।
नापि सप्तर्षीन् व्योम्नि पश्यति म्रियते तदा ॥ १६७ ॥

प्रभाते यदि वा सायं ज्योत्स्नावत्यामथो निशि ।
प्रवितत्य निजौ बाहू निजच्छायां विलोक्य च ॥ १६८ ॥
शनैरुत्क्षिप्य नेत्रे स्वच्छायां पश्येत्ततोऽम्बरे ।
न शिरो दृश्यते तस्यां यदा स्यान्मरणं तदा ॥ १६९ ॥
5 नेक्ष्यते वामबाहुश्चेत् पुत्रदारक्षयस्तदा ।
यदि दक्षिणबाहुर्नेक्ष्यते भ्रातृक्षयस्तदा ॥ १७० ॥
अदृष्टे हृदये मृत्युरुदरे च धनक्षयः ।
गुह्ये पितृविनाशस्तु व्याधिरूरुयुगे भवेत् ॥ १७१ ॥
अदर्शने पादयोश्च विदेशगमनं भवेत् ।
10 अदृश्यमाने सर्वांगे सद्यो मरणमादिशेत् ॥ १७२ ॥

× × ×

महानसे तथा शय्यागारे काकाः क्षिपंति चेत् ।
चर्मास्थिरज्जुं केशान् वा तदासन्नैव पंचता ॥ १८७ ॥
अथवोपश्रुतेर्विद्याद्विद्वान् कालस्य निर्णयम् ।
प्रशस्ते दिवसे स्वप्नकाले शस्तां दिशं श्रितः ॥ १८८ ॥
15 पूत्वा पंच नमस्कृत्याचार्यमंत्रेण वा श्रुती ।
गेहाच्छन्नश्रुतिर्गच्छेच्छिल्पिचत्वरभूमिषु ॥ १८९ ॥
चंदनेनार्चयित्वा क्ष्मां क्षिप्त्वा गंधाक्षतादि च ।
सावधानस्ततस्तत्रोपश्रुतेः शृणुयाद् ध्वनिम् ॥ १९० ॥
अर्थांतरापदेश्यश्च सरूपश्चेति स द्विधा ।
20 विमर्शगम्यस्तत्राद्यः स्फुटोक्तार्थोऽवरः पुनः ॥ १९१ ॥
यथैष भवनस्तंभः पंचषड्भिरयं दिनैः ।
पक्षैर्मासैरथो वर्षैर्भंक्ष्यते यदि वा न वा ॥ १९२ ॥
मनोहरतरश्चासीत् किं त्वयं लघु भंक्ष्यते ।
अर्थांतरापदेश्यः स्यादेवमादिरुपश्रुतिः ॥ १९३ ॥
25 एषा स्त्री पुरुषो वासौ स्थानादस्मान्न यास्यति ।
दास्यामो न वयं गंतुं गंतुकामो न चाप्ययम् ॥ १९४ ॥
विद्यते गंतुकामोऽयमहं च प्रेषणोत्सुकः ।
तेन यास्यत्यसौ शीघ्रं स्यात्सरूपेत्युपश्रुतिः ॥ १९५ ॥
कर्णोद्घाटनसंजातोपश्रुत्यंतरमात्मनः ।
30 कुशलाः कालमासन्नमनासन्नं च जानते ॥ १९६ ॥
शनिः स्याद्यत्र नक्षत्रे तद्दातव्यं मुखे ततः ।
चत्वारि दक्षिणपाणौ त्रीणि त्रीणि च पादयोः ॥ १९७ ॥
चत्वारि वामहस्ते तु क्रमशः पंच वक्षसि ।
त्रीणि शीर्षे दृशोर्द्वे द्वे गुह्य एकः शनौ नरे ॥ १९८ ॥
35 निमित्तसमये तत्र पतितं स्थापनाक्रमात् ।
जन्मर्क्षं नामऋक्षं वा गुह्यदेशे भवेद्यदि ॥ १९९ ॥
दृष्टं श्लिष्टं ग्रहैर्दुष्टैः सौम्यैरप्रेक्षितायुतम् ।
सज्जस्यापि तदा मृत्युः का कथा रोगिणः पुनः ॥ २०० ॥

पृच्छायामथ लग्नास्ते चतुर्थदशमस्थिताः ।
ग्रहाः क्रूराः शशी षष्ठाष्टमश्चेत् स्यात्तदा मृतिः ॥ २०१ ॥
पृच्छायाः समये लग्नाधिपतिर्भवति ग्रहः ।
यदि वास्तमितो मृत्युः सज्जस्यापि तदा भवेत् ॥ २०२ ॥
लग्नस्थश्चेच्छशी सौरिर्द्वादशे नवमः कुजः । 5
अष्टमोऽर्कस्तदा मृत्युः स्याच्चेन्न बलवान् गुरुः ॥ २०३ ॥
रविः षष्ठस्तृतीयो वा शशी च दशमस्थितः ।
यदा भवति मृत्युः स्यात्तृतीये दिवसे तदा ॥ २०४ ॥
पापग्रहाश्चेदुदयात्तुर्ये वः द्वादशेऽथवा ।
दिशंति तद्विदो मृत्युः तृतीये दिवसे तदा ॥ २०५ ॥ 10
उदये पंचमे वापि यदि पापग्रहो भवेत् ।
अष्टभिर्दशभिर्वा स्याद्दिवसैः पंचता ततः ॥ २०६ ॥
धनुर्मिथुनयोः सप्तमयोर्यद्यशुभग्रहाः ।
तदा व्याधिर्मृतिर्वा स्याज्ज्योतिषामिति निर्णयः ॥ २०७ ॥

× × ×

सूर्योदयक्षणे सूर्यं पृष्ठे कृत्वा ततः सुधीः । 15
स्वपरायुर्विनिश्चेतुं निजच्छायां विलोकयेत् ॥ २११ ॥
पूर्णां छायां यदीक्षेत तदा वर्षं न पंचता ।
कर्णाभावे तु पंचत्वं वर्षैर्द्वादशभिर्भवेत् ॥ २१२ ॥
हस्तांगुलीस्कंधकेशपार्श्वनासाक्षये क्रमात् ।
दशाष्टसप्तपंचत्र्येकवर्षैर्मरणं भवेत् ॥ २१३ ॥ 20
षण्मासैर्म्रियते नाशे शिरसश्चिबुकस्य वा ।
ग्रीवानाशे तु मासेनैकादशाहेन दृक्क्षये ॥ २१४ ॥
सच्छिद्रे हृदये मृत्युर्दिवसैः सप्तभिर्भवेत् ।
यदि च्छायाद्वयं पश्येद्यमपार्श्वं तदा व्रजेत् ॥ २१५ ॥

× × ×

अनया विद्ययाष्टाग्रशतवारं विलोचने । 25
स्वच्छायां चाभिमंत्र्यार्कं पृष्ठे कृत्वारुणोदये ॥ २१८ ॥
परच्छायां परकृते स्वच्छायां स्वकृते पुनः ।
सम्यक् तत् कृतपूजः सन्नुपयुक्तो विलोकयेत् ॥ २१९ ॥
संपूर्णां यदि पश्येत्तामावर्षं न मृतिस्तदा ।
क्रमजंघाजान्वभावे त्रिद्व्येकाब्दैर्मृतिः पुनः ॥ २२० ॥ 30
उरोरभावे दशभिर्मासैर्नश्येत्कटेः पुनः ।
अष्टाभिर्नवभिर्वापि तुंदाभावे तु पंचभिः ॥ २२१ ॥
ग्रीवाभावे चतुस्त्रिद्व्येकमासैर्म्रियते पुनः ।
कक्षाभावे तु पक्षेण दशाहेन भुजक्षये ॥ २२२ ॥
दिनैः स्कंधक्षयेऽष्टाभिश्चतुर्याम्या तु हृत्क्षये । 35
शीर्षाभावे तु यामाभ्यां सर्वाभावे तु तत्क्षणात् ॥ २२३ ॥

एवमाध्यात्मिकं कालं विनिश्चेतुं प्रसंगतः ।
बाह्यस्यापि हि कालस्य निर्णयः परिभाषितः ॥ २२४ ॥

(पञ्चमप्रकाशः)

XIV From *YR*:—

यामलात्—
शुष्कास्यः श्यामकोष्ठोऽप्यसितरदततिः शीतनासाग्रदेशः
शोणाक्षश्चैकनेत्रो लुलितकरपदः श्रोत्रपातित्ययुक्तः ।
शीतश्वासोऽथ चोष्णश्वसनसमुदयः शीतगात्रप्रकम्पः
सोद्वेगो निष्प्रपञ्चः प्रभवति मनुजः सर्वथा मृत्युकाले ॥

(पृष्ठ. ६)

अथ कालज्ञानम्
अभ्रैर्लक्षितलक्ष्मणेन पयसा पूर्णेन्दुना भानुना
पूर्वादक्षिणपश्चिमोत्तरदिशां षट्त्रिद्विमासैककम् ।
छिद्रं पश्यति चेत्तदा दशादिनं धूमाकृतिं पञ्चमे
ज्वालां पश्यति सद्य एव मरणं कालोचितज्ञानिनाम् ॥ १ ॥
अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च ।
आयुर्हीना न पश्यन्ति चतुर्थं मातृमण्डलम् ॥ २ ॥
अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमेव च ।
विष्णुस्तु भ्रूद्वयोर्मध्यो भ्रूद्वयं मातृमण्डलम् ॥ ३ ॥
नासाग्रं भ्रूयुगं जिह्वां मुखं चैव न पश्यति ।
कर्णघोषं न जानाति स गच्छेद्यममन्दिरम् ॥ ४ ॥
नवभ्रूः पञ्चचक्षुश्च सप्तकर्णस्त्रिनासिका ।
जिह्वां च दिनमेकं तु कालचिह्नं दिने दिने ॥ ५ ॥
अकस्माच्च भवेत्स्थूलो ह्यकस्माच्च कृशो भवेत् ।
अकस्मादन्यथाभावः षण्मासैश्च विनश्यति ॥ ६ ॥

× × ×

रात्रौ दाहोऽभितपति दिवा जायते शीतलत्वं
कण्ठे श्लेष्मा विरसवदनं कुङ्कुमाकारनेत्रं ।
जिह्वा कृष्णा वहति च सदा स्थूलसूक्ष्मा च नाडी
तद्भैषज्यं स्मरणमधुना रामरामेति नाम्नः ॥ ९ ॥

इति कालज्ञानम् ॥

(पृष्ठ. ७)

XV From *KJ*:—

हृदयं नाभिनासा च पाणिपादौ च शीतलौ ।
शिरस्तापो भवेद्यस्य तस्य मृत्युर्भविष्यति ॥ ३९ ॥

× × ×

अंगकंपो गतिभंगो(?)वर्णभ्रावर्तमेव च ।
गंधं स्वादं न जानाति स गच्छेद्यमशासने ॥ ४१ ॥

× × ×

लक्ष्मं( sic ) लक्ष्मण( sic )लक्ष्मणेन पयसा भानोः प्रभामण्डलम्
क्षीणं दक्षिणपश्चिमोत्तरपरः षड्द्वित्रिमासैककम् ।
मध्ये छिद्रगतं भवेद्दशदिनं धूम्राकुले तद्दिनम्
सर्वैः परिभाषितं स्फुटतरं आयुःप्रमाणं ध्रुवम् ॥ ५६ ॥
भरणी च मघा पूर्वा कृत्तिका हस्त( sic )विद्यते ।
शतभिषार्द्रा च विज्ञेया एते नक्षत्र( sic )मृत्युदाः ॥ ५७ ॥

( *KJ* = कालज्ञानाख्यं शंभुनाथकृतमप्रकटपुस्तकम् । Baroda Oriental Institute, MSS Library, Acc. No. 9726. Subject वैद्यक. The MS is very corrupt ).

XVI From *DS*:—

अथ स्वप्नविचारः ॥ स्वप्नो द्विविधः । इष्टफलोऽनिष्टफलश्चेति । तत्र सामान्यत इष्टफलो यथाः— नदीसमुद्रतरणमाकाशगमनं तथा । ग्रहनक्षत्रमार्तंडचंद्रमंडल-दर्शनम् ॥ हर्म्यस्यारोहणं चैव प्रासादशिरसोऽपि वा । स्वप्ने च मदिरापानं वसामांसस्य भक्षणम् ॥ कृमिविष्ठानुलेपश्च रुधिरेणाभिषेचनम् । भोजनं दधिभक्तस्य श्वेतवस्त्रा-नुलेपनम् ॥ रत्नान्याभरणादीनि स्वप्ने दृष्ट्वा प्रसिद्ध्यति । देवताविप्रपृथ्वीशान्प्रशस्ता-भरणांगनाः ॥ वृषेभपर्वतक्षीरिफलिवृक्षाधिरोहणम् । दर्पणामिषमाल्यार्ति शुक्लपुष्पां-बराश्रितान् । द्रष्टुः स्वप्नेऽर्थलाभः स्याद्व्याधिमोक्षश्च जायते ॥

अथानिष्टफलः ॥ दुष्टं किंशुकवल्मीकपारिभद्राधिरोहणम् । तैलकार्पास-पिण्याकलोहप्राप्तिर्विपत्तये ॥ विवाहकरणं स्वप्ने रक्तस्रग्वस्त्रधारणम् । स्रोतसाहरणं नेष्टं पक्वमांसस्य भोजनम् ॥ आदित्यस्याथ चंद्रस्य निष्प्रभस्यावलोकनम् । नक्षत्रादेश्च पातश्च स्वप्ने मरणशोककृत् ॥ अशोककरवीरपलाशानां पुष्पितानां स्वप्ने दर्शने शोकः नौकारोहणे प्रवासः रक्तवस्त्रगंधधारिण्याः स्त्रिया आलिंगने मृत्युः घृततैलादि-नाऽभ्यंगे व्याधिः केशदंतपाते धननाशः पुत्रशोको वा खरोष्ट्रमहिषैर्याने तद्युक्तरथा-रोहणे वा मृत्युः कर्णनासाकरादिच्छेदे पंकमज्जने तैलाभ्यंगे विषभक्षणे प्रेतालिंगने नलदमालिनो दिगंबरस्य याने कृष्णपुरुषदर्शने च मृत्युः ॥

अथ जागृतावनिष्टानि ॥ अरुंधतीं ध्रुवं चैव नभोमंदाकिनीं तथा । स्वनासाग्रं च चंद्रांकमायुर्हीनो न पश्यति ॥ पांसुपंकादिषु न्यस्तं चरणं खंडितं यदि । स्नानांबुलिप्त-गात्रस्य यस्यास्यं प्राक् प्रशुष्यति । गात्रेष्वार्द्रेषु सर्वेषु सूर्यादिद्वयदर्शनम् ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् । पिहिते कर्णयुगले यस्य घोषानुपश्रुतिः ॥ अदर्शनं स्वशिरसः प्रतिबिंबे जलादिषु । छिद्रप्रतीतिश्छायायां स चिरं नैव जीवति ॥

यस्तु पश्यति वै स्वप्ने राजानं कुंजरं हयम् । सुवर्णं वृषभं गवां कुटुंबं तस्य वर्धते ॥ वृषं वाऽऽरुह्य तत्रस्थस्य आगरे धनाप्तिः श्वेतसर्पेण दक्षिणभुजदंशे दशदिने सहस्रधनलाभः जलस्थस्य वृश्चिकोरगग्रासे जयपुत्रधनानि प्रासादशैलारोहणे समुद्रतरणे राज्यं तडागमध्ये पद्मपत्रेषु घृतपायसभोजने राज्यं बलाकाकुक्कुटी-क्रौंचीदर्शने भार्याप्राप्तिः निगडैर्बंधे बहुपाशबंधे वा पुत्रधनादीनि ॥ आसने शयने याने

शरीरे वाहने गृहे। ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥ सूर्यचंद्रमंडलदर्शने रोगिणो रोगनाशोऽन्यस्य धनं सुरारुधिरयोः पाने विप्रस्य विद्या शूद्रादेर्धनं शुक्लांबरगंधधारिण्या सुभगस्त्रियाऽऽलिंगने संपत्तिः छत्रपादुकोपानहखड्गलाभे धनं वृषभयुक्तरथारोहणे धनं दधिलाभे वेदाप्तिः दधिपयःपाने घृतलाभे च यशः घृतभक्षणे क्लेशः अंत्रैर्वेष्टने राज्यं मनुष्यस्य चरणमांसभक्षणे शतं लाभः बाहुभक्षणे सहस्रं शीर्षमांसभक्षणे राज्यं वा सहस्रधनं वा सफेनक्षीरपाने सोमपाने गोधूमदर्शने धनलाभः यवदर्शने यज्ञः गौरसर्षपदर्शने लाभः ॥ नागपत्रं लभेत्स्वप्ने कर्पूरागमनं तथा। चंदनं पांडुरं पुष्पं तस्य श्रीः सर्वतोमुखी ॥ सर्वाणि शुक्लान्यतिशोभनानि कार्पासभस्मौदनतक्रवर्ज्यम्। सर्वाणि कृष्णान्यतिनिंदितानि गोहस्तिदेवद्विजवाजिवर्ज्यम् ॥ स्वप्नस्तु प्रथमे यामे वत्सरांते फलप्रदः। द्वितीयेऽष्टमासैः तृतीये त्रिमासांते चतुर्थे यामे मासांते अरुणोदये दशाहांते सूर्योदये सद्यःफलः ॥

(pp. 388, 389)

# रिष्टसमुच्चयस्थगाथार्धानां वर्णानुक्रमसूची ।

( पू = पूर्वार्धं; उ = उत्तरार्धं; अ = प्रथमचरण; आ = द्वितीय-चरण; इ = तृतीयचरण; ई = चतुर्थचरण )

N. B. The figures on the right indicate the numbers of the stanzas.

---

# रिष्टसमुच्चयगतशब्दानां वर्णानुक्रमसूची ।

N. B. The figures on the right indicate the numbers of the stanzas.

# परिशिष्टान्तर्गतविषयाणां वर्णानुक्रमसूची ।

N. B. Numerals in deep black indicate the numbers of the pages and those in black the numbers of the lines.

## 'संवेगरंगशाला'गतायुर्ज्ञानाधिकारवर्णितविषयाणां वर्णानुक्रमसूची ।

N. B. Figures in deep black indicate the numbers of the pages of the Introduction and the remaining figures indicate the numbers of the stanzas.

---

# INDEX

*N. B.* Numerals in deep black indicate the numbers of the pages of the Introduction, and those in ordinary types following the numerals in deep black indicate the numbers of the lines. T denotes English Translation; N, Notes and fn, footnote.

# Bibliography


ADAMS, I., *Persia by a Persian*, London, 1906.

*Aitareya Brāhmaṇa.*

*Annals of the Bhandarkar Oriental Research Institute*, Vol. XIV, Pts. I-II and Vol. XVI, Pts. I-II.

*Āpastamba S'rautasūtra.*

*Āśvalāyana Gṛhyasūtra.*

*Atharvaveda.*

AUFRECHT, *Catalogus Catalogorum.*

*Baudhāyana Dharmasūtra.*

Bhadrabāhu, (1) *Arhaccūḍāmaṇisārasaṭīka*, Mahāvīra Granthamālā, no. 6, Pub. S. K. KOTECHA, Dhulia, 1992 (V. S.).

(2) *Dasaveāliaṇijjutti*, Ed. K. V. ABHYANKER, Ahmedabad, 1932.

(3) *Oghaniryukti*, Āgamodaya Samiti Series, no. 17, Surat, 1976 (V. S.).

*Bhagavai*, Ed. Āgamodaya Samiti, nos. 12-14, Surat.

*Bhaiṣajyaratnāvali*, Ed. Kaviraja Vinodelal SEN, Calcutta.

*Bhāratīya Vidyā* (Eng.), English bi-annual, Pub. Bharatiya Vidya Bhavan, Bombay, Vol. II.

*Bṛhaṭṭippaṇikā*, Pub. *JSS*, Vol. I, no. 4, p. 157.

BURTON, R. F., *Mission to Galele*, London, 1864, II.

Caraka, *Caraka Saṁhitā*, Ed. J. T. ACHARYA, Nirnayasagar, Bombay, 1935.

CHURCHILL, W. L. S, *Story of the Malakand Field Force*, London, 1898.

CLEMEN, C., *Primitive Christianity*, Eng. Trans., Edin., 1912.

CORYAT, T., *Crudities*, London, 1611, I.

*Daśaprakīrṇaka*, Āgamodaya Samiti Series, no. 46, Surat, 1927.

DESAI, M. D., *Jaina Sāhityano Sankṣipta Itihāsa*, Bombay, 1933.

Dhanapāla, *Bhavisattakahā*, Ed. DALAL and GUNE, GOS, 20, Baroda, 1923.

*Dīghanikāya*, Ed. Pāli Text Society.

DORSEY, 11 *Report of the Bureau of Ethnology, Washington.*

Durgadeva, *Arghakāṇḍa* (unpublished work).

FISHER, G. F., *The Beginnings of Christianity*, Edin., 1878.

GANDHI, L. B., *Pattnasthabhāṇḍāgārīyagranthasūcī*, GOS, 76, Baroda, 1937.

*Gobhila Gṛhyasūtra.*

GUTCH, Mrs., *County Folklore*, II, London, 1901.

Haribhadra, (1) *Lagnaśuddhi*, Pub. Bhimsi Maneck, Nirnayasagar, Bombay, 1918.

(2) *Samarāiccakahā*, Ed. H. JACOBI, Bibliotheca Indica, no. 169, Calcutta.

HAWKES, E. W., *The Labrador Eskimo* (Anthropological Series of Geological Survey, no. 14), Ottawa, 1916.

Hemacandra, (1) *Prākrit Vyākaraṇa*, Ed. Dr. P. L. VAIDYA, Ārhatamataprabhākara Series, no. 6, Poona, 1928.

(2) *Yogaśāstra*, Trans. Panuyāsa Kesaravijaya Gaṇī, Vijayakamalakesara Series, no. 5, Bombay, 1980 (V. S.), 4th edition.

HENRY, Victor., *La Magie dans l' Inde Antique.*

*Hiraṇyakeśin Gṛhyasūtra.*

*Imperial Gazetteer of India*, Oxford, 1908, New edition, Vols. 8 and 16.

*Indian Antiquary*, 1896.

*Jaina Granthāvali*, Pub. Śvetāmbara Jain Conference, Bombay, 1909.

*Jaina Sāhitya Saṁśodhaka* (quarterly), Ed. Muniraja Jinavijayaji, Bharat Jain Vidyalaya, Poona. Vol. 1. (now defunct).

Jinacandra, *Saṁvegaraṅgaśālā* (unpublished work).

Jñānasāgara, *Ratnacūḍakathā*, Yaśovijaya Jaina Granthamālā, Bhavnagar, 1917.

*Journal of the American Oriental Society*, Vol. xv.

*Kauśikasūtra.*

Kauṭilya, *Arthaśāstra*, Trans. Shamashastri, Mysore, 1929.

*Kavidarpaṇa*, Ed. Prof. H. D. VELANKER, in the *Annals*, BORI, Vol. xvi, Pts. I–II.

KEITH, A. B., *Aitareya Āraṇyaka*, Oxford, 1909.

KELLER, A. G., *Homeric Society*, London, 1913.

*Kuvalayamālā*, an article by Jinavijaya Muni, Pub. *BV* (Eng.), Vol. 2, nos. 1 and 2.

*Lāṭyāyana S'rautasūtra.*

LECLERCQ, A. Bouché., *L' Astrologie Grecque*, Paris, 1899.

Livy, *Annals*, XXII; XXVII; XXX; XXXI.

*Mahābhārata*, Chitrashala Press, Poona, 1932, 1st edition.

*Mahārāṣṭriya Jñānakośa*, Vol. 11.